एस्.जगन्नाथः। मैसूरु
jagannathas1956@gmail.com




१०
३.११.२०२१
बुधवासरः

दशस्वपि दिक्षु कटाक्षं पातयन्ती संस्कृतपत्रिका।

**जगन्नाथीयम्**

**म्लानेषु पुष्पेषु पिपीलिकानां
पङ्क्तेः प्रचारः स्थगितो न यत् तत्।
पुष्पेषु न प्रीतिमभिव्यनक्ति
प्रीतिं तु मिष्टे मकरन्दशेषे॥**

## यूयं यूयं वयं वयम्।

१.कापेयी किं भाषा
सकलपशूनां श्रेष्ठा ?
ते हरिणा किं विदधतु ?
येषां स्वा गीरस्ति॥

२.कुहचन कोणे जाताः
कम्पितपुच्छा ये ते।
कपय एव पशुपा इति
केचिच्चीत्कुर्वन्ति॥

३. हरिणा ये स्वे राज्ये
भाषन्ते निजवाग्भिः।
स्वोक्तीनां रक्षायै
ते बत, किं कुर्वन्तु ?॥

४.तीक्ष्णाग्रा नखरा वा
दंष्ट्रा वा न समर्थाः।
सत्यैक्ये शृङ्गानां
क्व भीर्निशितकोटीनाम्॥

५.यदि हरिणाः सर्वेऽपि
प्रतिभटनां कुर्वन्ति।
प्लवगानां पुच्छानि
क्वापि पलायन्ते द्राक् ॥

६. कुपदैरपमीमासुं
प्राणांस्तव भाषां ते।
यमपि कमपि पथि पथिकं
धावय काननवृक्षान्॥

७. कस्याञ्चन शाखायां
लङ्घमान जीविंस्त्वम्।
कथं भवसि सकलवने
राजा राजेशो वा॥

८.गृहबिलेषु मूषिक इव
विशत्यापणेषु कोऽपि।
ततो वदति भाषा मे
सर्वजनतया पूज्या॥

९. इतरभाषितेषु वचन
विलसितानि धिक्कृत्य।
स्वीया गीः सर्वेषां
गीरस्त्विति-केयं गीः ?॥

१०.अन्योक्तिर्येषां गीस्
तेषां मध्ये केचित्।
भ्रष्टबुद्धयः सन्तो
स्वगिरा अपमन्यन्ते॥

११.उत्तरे दिगुत्तरा त्व-
मेधि दक्षिणाऽस्म्यहम्।
मानय मां, मानिता च
भव, भूयात् स्वस्ति ते॥

## मुसलः खेलति मृदुले हृदये

मार्दवं सदाऽपि न श्रेष्ठः सद्गुणः। प्रकरण वशात् अस्माभिः जनैः दाढर्यवद्भिः भाव्यम् तालिबान् जनाः आफ्घानिस्थाने किं कुर्वन्तीति स्पष्टमस्माकम्। बाङ्ग्लादेशे हिन्दवः कथं मतान्धैर्न केवलं हिंस्यन्ते परन्तु मार्यन्ते चेति सुज्ञात एव विषयः। हस्तपादानां छेदनं तैलसेकपूर्वकम् अग्निसात् करण मित्यादिकाभिः हिंसाभिः पीड्यमाना हिन्दवः प्रत्यहं रुदन्ति। तथापि भारते केचन उदारमतय इवाभिनयन्तो हिन्दूनेव दूषयन्ति। तत्र कारणं स्पष्टम्। मृदुहृदयाः सन्तो हिन्दवो वाङ्मुसलैरथ च वास्तविकमुसलैराहन्यन्ते खलसमुदयेन। जोषमुप विशाम तालिबान्नीचानां विषये। कनिष्ठपक्षत्वेन दुष्टानां स्तुतिपाठकान् वयं खण्डयाम। यावन्तं कालं हिन्दवो न जाग्रति, तावन्तं कालमित्थमेव दुष्ट स्तावकानां विजयध्वजो राराजते नभसि।

## कुसुमं स्यति कण्टकम्

**कुसुमं स्यति कण्टकम्** इत्याभाणकः। स्यति=खण्डयति। कदाचिदविश्वास्याः प्रसंगा जायन्ते जगति। स्मर्यतामेष प्रसंगो यः प्रायो विंशतिवर्षपूर्वं पत्रिकासु प्रकटितः-कश्चन दुष्टः काञ्चन अष्टवर्षां बालिकाम् अपहर्तुं प्रायतत। सा नैव अबिभेत्। झटिति स्वस्याः नखान् दन्तांश्च अस्मरत् , तं दुष्टं बलवत् अदलत् अदशच्च। स्रुतरुधिरः स दुष्टस्ताम् उज्झन् पलायत।

## सांस्कृते नवीने धर्मशास्त्रे अपराधः

पौर्वकालिकेषु स्मृत्यादिग्रन्थेषु अपराधत्वेन यानि कृत्यानि निरूपितानि, तद्भिन्नानि मत्सदृशैर्जनैरधुना अपराधकोटिपतितानि कृत्यानि प्रायेणाचर्यन्त इति भाति। संस्कृतभाषया प्रबन्धरचनैव तदपराधकृत्यं, विशिष्य संशोधनप्रबन्धानां रचना। सारस्वतीसुषमेति प्रख्याता या पत्रिका निःसरति संपूर्णानन्दसंस्कृतविश्व-विद्यालयतः, तत्र प्रकटितानां प्रबन्धानां पट्टिकामेकत्राहं समगृह्णाम्। तत्र द्वित्रेषु संपुटेषु, अन्यत्र (संशोधन पत्रिकासु ) प्रकाशितानां प्रबन्धानां केषाञ्चन अभिधान पट्टिकां दृष्ट्वा संतोषो यद्यप्यजायत, परन्तु तत्र केवलं इङ्ग्लीष्प्रबन्धानामेव नामपट्टिकां दृष्ट्वा 'किं संस्कृतेन संशोधनलेखरचना अपराधाय कल्पत' इति मनो मे संशयदोलाधिरूढमभवत्। संस्कृतविद्वद्वरिष्ठानां निवास भूमिरिति या प्रथितविभवा काशी, तत्रैव जनुःप्राप्त वती या सारस्वती सुषमा, तत्रैव-अन्यपत्रिकाप्रकटित संस्कृतप्रबन्धनाम्नाम् इयती अवहेलना! येषां माडर्न् रीसर्च् स्कालर्स्-इति चिख्यापयिषा तैः ''चरणेनापि सव्येन न स्पृशामि निशाचरम्'' इतिवत् आधुनिकसंस्कृत संशोधनलेखग्रन्थेषु निशाचरत्वं दृश्यत इति यत् तत्तु सहजं तेषां ''स्याँन्स्क्रीट्रीसर्च्स्कालर्स्''त्वात्। परन्तु परम्परीणया पद्धत्याऽधीतसंस्कृतानां वाराणसी-वासवतामपि संस्कृतपण्डितानां बुद्धिपद्धतिरनयैव सरण्या प्रवर्तत इति यत् तत्....?

## सर्वगन्धासंपादकः डा.वीरभद्रमिश्रः

डा.वीरभद्रमिश्रः। सर्वगन्धासंपादकः। लखनौविश्वविद्यानिलये संस्कृतप्राचार्यः। संस्कृत पत्रिकाः प्रचालयत्स्वाधुनिकेषु विद्वत्सु प्रगति शीलः। संस्कृतपत्रिकासंपादकेषु स एकको यो देवतास्तोत्राणि न प्राकाशयत्। ''किं भवान् जानाति'' इत्याख्ये स्तम्भे भाषादृष्ट्या विषयदृष्ट्या च बहून् प्रश्नान् स्वयं पृष्ट्वोदतरत्। अन्यत्र संस्कृत पत्रिकासु अद्रष्टव्यं बहु सर्वगन्धायामासीत्।

परन्तु मम दृष्ट्या अनङ्गीकार्यं तन्मतमिति यत् तत्तु तस्य ''संस्कृता'' इति प्रयोगः। भाषा शब्दस्य विशेष्यत्वाद्विशेषणं ''संस्कृते''ति सुष्ठिति तदीयं मतम्। ''व्याहार'' इत्यस्य पुंस्त्वात् कुतः ''संस्कृतः'' इति न शुद्धमिति मम वादं पुरश्चकार।